# रामायणम्

## बालकाण्डम्।

---

तसर्गावधि सप्तसप्ततिसर्गपर्य्यन्तम्
मानुजकृतटीका सहितम्। 444

---

वि, ए, उपाधिधारिणा
श्रीजी . न्द-विद्यासागर-भट्टाचार्य्येण
संस्कृतं प्रकाशितञ्च।

---

कलिकातानगरे सारसुधानिधियन्त्रे
मुद्रितम्।
१८८१

---

*Published by Pandit Jibananda Vidyasagara* B A
*Superintendent Free Sanskrit Collage*
*No 2 Ramanatha Majumdar's Street* CALCUTTA

Printed by Pandit Sadananda Mishra
No 51 Cross Street, Sarasudhanidhi Press

## एकसप्ततितमः सर्गः ।



एवं ब्रुवाणं जनकः प्रत्युवाच कृताञ्जलिः ।
श्रोतुमर्हसि भद्रन्ते कुलं नः परिकीर्त्तितम् ॥ १ ॥
प्रदाने हि मुनिश्रेष्ठ ! कुलं निरवशेषतः ।
वक्तव्यं कुलजातेन तन्निबोध महामते ! ॥ २ ॥
राजाभूत्त्रिषु लोकेषु विश्रुतः स्वेन कर्म्मणा ।
निमिः परम धर्म्मात्मा सर्वसत्त्ववतां वरः ॥ ३ ॥
तस्य पुत्रो मिथिर्नाम जनको मिथिपुत्रकः ।
प्रथमो जनको राजा जनकादप्युदावसुः ॥ ४ ॥
उदावसोस्तु धर्म्मात्मा जातो वै नन्दिवर्द्धनः ।
नन्दिवर्द्धसुतः शूरः सुकेतुर्नाम नामतः ॥ ५ ॥

अथ जनक कन्या पितृत्वात् नामाद्यवर्गे प्रभुताया वर्णौचित्येन स्ववंश यमेवाह एवमिति ब्रुवाण वसिष्ठ अस्माभि परिकीर्तितं नोऽस्माक कुल श्रोतु र्हसि ॥ १ ॥

कुलजातेन सत्कुलप्रसूतेन प्रदाने कन्यादानविषये कुल वक्तव्यमित्यन्वय ॥ २ ॥

तस्य निमि, मिथि नाम्ना च मिथिर्नाम प्रथमो जनक सर्वेषामस्माक जनक इत्यवहारार्थत्वं मूलभूत ॥ ४ ॥

सुकेतोरपि धर्मात्मा देवरातो महाबलः ।
देवरातस्य राजर्षेर्बृहद्रथ इतिस्मृतः ॥ ६ ॥
बृहद्रथस्य शूरोऽभून्महावीरः प्रतापवान् ।
महावीरस्य धृतिमान् सुधृतिः सत्यविक्रमः ॥ ७ ॥
सुधृतेरपि धर्मात्मा धृष्टकेतुः सुधार्म्मिकः ।
धृष्टकेतोश्च राजर्षेर्हर्य्यश्व इति विश्रुतः ॥ ८ ॥
हर्य्यश्वस्य मरुः पुत्रो मरोः पुत्रः प्रतीन्धकः ।
प्रतीन्धकस्य धर्मात्मा राजा कीर्त्तिरथः सुतः ॥ ९ ॥
पुत्रः कीर्त्तिरथस्यापि देवमीढ़ इति स्मृतः ।
देवमीढस्य विबुधो विबुधस्य महीध्रकः ॥ १० ॥
महीध्रकसुतो राजा कीर्त्तिरातो महाबलः ।
कीर्त्तिरातस्य राजर्षेर्महारोमा व्यजायत ॥ ११ ॥
महारोमण्स्तु धर्मात्मा स्वर्णरोमा व्यजायत ।
स्वर्णरोमण्स्तु राजर्षेर्ह्रस्वरोमा व्यजायत ॥ १२ ॥
तस्य पुत्र द्वय राज्ञो धर्मज्ञस्य महात्मनः ।
ज्येष्ठोऽहमनुजो भ्राता मम वीरः कुशध्वजः ॥ १३ ॥
मां तु ज्येष्ठं पिता राज्ये सोऽभिषिच्य पिता मम ।
कुशध्वजं समावेश्य भारं मयि वनङ्गतः ॥ १४ ॥
वृद्धे पितरि स्वर्याते धर्मेण धुरमावहम् ।
भ्रातरं देवसङ्काशं स्नेहात्पश्यन् कुशध्वजम् ॥ १५ ॥

नामप्रसिद्ध नामत सुकेतुरित्यर्थं ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥
तस्य ह्रस्वरोमण ज्येष्ठोऽहं ममानुजः कुशध्वज ॥ १३ ॥
स मम पिता मां ज्येष्ठं तु राज्ये ऽभिषिच्य कुशध्वज भार भरणीय यद्वा कुश-
ध्वज भार राज्यभारं च मयि समावेश्य स्थापयित्वा वनं गत इत्यन्वय ॥ १४ ॥
धुर राज्यभारं स्नेहात् पश्यन् पालयन् ॥ १५ ॥

कस्यचित्त्वथ कालस्य सांकाश्यादागतः पुरात् ।
सुधन्वा वीर्य्यवान् राजा मिथिलामवरोधकः ॥ १६ ॥
स च मे प्रेषयामास शैवं धनुरनुत्तमम् ।
सीता च कन्या पद्माक्षी मह्यं वै दीयतामिति ॥ १७ ॥
तस्या प्रदानान्महर्षे । युद्धमासीन्मया सह ।
स हतो विमुखो राजा सुधन्वा तु मया रणे ॥ १८ ॥
निहत्य तं मुनिश्रेष्ठ । सुधन्वानं नराधिपम् ।
सांकाश्ये भ्रातरं शूरमभ्यषिञ्चं कुशध्वजम् ॥ १९ ॥
कनीयानेष मे भ्राता अहं ज्येष्ठो महामुने । ।
ददामि परमप्रीतोवध्वौ ते मुनिपुङ्गव । ॥ २० ॥
सीतां रामाय भद्रन्ते ऊर्मिलां लक्ष्मणाय वै ।
वीर्य्यशुल्कां मम सुतां सीतां सुरसुतोपमाम् ॥ २१ ॥
द्वितीयामूर्मिलाञ्चैव त्रिर्वदामि न संशयः ।
ददामि परमप्रीतोवध्वौ ते मुनिपुङ्गव । ॥ २२ ॥
रामलक्ष्मणयो राजन् । गोदानं कारयस्वह ।
पितृकार्य्यञ्च भद्रन्ते ततो वैवाहिकं कुरु ॥ २३ ॥

—सांकाश्यामिति सुधन्वनगरनाम अवरोधकोऽगमत् अवरोद्धु मागतवानित्यर्थः ॥ १६
शैव ध० सीता च कन्या मह्य दीयतामिति दूतान् प्रेषयामास मे इत्यन्वय ॥
१७ ॥

तस्य उक्तवस्तु, यस्य विमुखो युद्धविमुख ॥ १८ ॥

साङ्काश्यं सुधन्वनगरे ॥ १९ ॥ २० ॥

ऊर्मिला योनिजा निजपुत्रीम् ॥ २१ ॥

त्रिर्वदामि उक्तमार्थं दार्ढ्यार्थेन्याशय. ॥ २२ ॥

गोदान समावर्तन वैवाहिक विवाहादौ कर्तव्यं पितृकार्य्यं नान्दीमुखश्राद्धम्

मघाह्यद्य महाबाहो ! तृतीयदिवसे प्रभो ! ।
फल्गुन्यामुत्तरे राजंस्तस्मिन् वैवाहिकं कुरु ॥ २४ ॥
रामलक्ष्मणयोरर्थे दानं कार्य्यं सुखोदयम् ॥ २५ ॥
इत्यार्षे श्रीमद्वाल्मीकीरामायणे आदिकाव्ये बालकाण्डे
एकसप्ततितमः सर्गः ॥ ७१ ॥

---

## द्विसप्ततितमः सर्गः ।

तमुक्तवन्तं वैदेहं विश्वामित्रो महामुनिः ।
उवाच वचनं वीरं वसिष्ठसहितो नृपम् ॥ १ ॥

अद्य तृतीयदिवसं तव मिथिला प्रवेशात् तृतीयदिवसे यज्ञसमाप्ते तृतीय दिवसे वाऽद्य मघानक्षत्र फलगुन्यां पूर्वफल्गुनीनक्षत्रे उत्तरे श्वः अतएव भगो युक्त प्रजापतिरित्यनेन अविरोध भगो हि पूर्वफल्गुनीदेव उत्तरफल्गुन्यामव्यमात्र कार्य वैवाहिक विवाह विनयादित्वात ठक् । मघानक्षत्र पितरो देवता फल्गुनीनक्षत्रमर्यमा देवता फलगुनीनक्षत्र भगो देवतेति तैत्तिरीयसंहितायाम् । अर्यम्णः पूर्वे फल्गुनीभगस्योत्तरे इति तद्ब्राह्मणे चोक्तत्व न यथाश्रुतमेव सम्यगिति तत्त्वम् । उत्तरे इति पल्वमायम् । यद्यप्युत्तरफल्गुनी सीताया जन्मर्क्ष तथापि तदुक्त प्रथमचरण विहाय तज्जन्मर्क्षत्वं न तस्या कन्याराशित्वात तृतीयैकादश भकूटषडष्टसत्त्व न दोष भकूटषड्ष्टा तत्र दुष्टमिति ज्योतिशास्त्र प्रसिद्ध किञ्च पञ्चासु तस्या द्वादशवर्षे इति तत्र विवाहोऽनुचित एव एकनाडीदोषेण च राम सीतयोर्विवाह इति ध्येयम् ॥ २४ ॥

रामलक्ष्मणयोरर्थ तदभ्युदयाय सुखोदय सुखोदर्कं दान गोभूतिलहिरण्यादि दान कार्य त्वयेति शेष ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये
बालकाण्डे एकसप्ततितम सर्ग ॥ ७१ ॥

वीरं जनकम् ॥ १ ॥

अचिन्त्यान्यप्रमेयाणि कुलानि नरपुङ्गव ! ।
इक्ष्वाकूणां विदेहानां नैषां तुल्योऽस्ति कश्चन ॥ २ ॥
सदृशो धर्म्मसम्बन्धः सदृशो रूपसम्पदा ।
रामलक्ष्मणयो राजन् ! सीता चोर्म्मिलया सह ॥ ३ ॥
वक्तव्यञ्च नरश्रेष्ठ ! श्रूयतां वचनं मम ।
भ्राता यवीयान् धर्म्मज्ञ एष राजा कुशध्वजः ॥ ४ ॥
अस्य धर्म्मात्मनो राजन् ! रूपेणाप्रतिमं भुवि ।
सुताद्वय नरश्रेष्ठ ! पत्न्यर्थं वरयामहे ॥ ५ ॥
भरतस्य कुमारस्य शत्रुघ्नस्य च धीमतः ।
वरयेते सुते राजं स्तयोरर्थे महात्मनोः ॥ ६ ॥
पुत्रा दशरथस्येमे रूपयौवनशालिनः ।
लोकपालसमाः सर्वे देवतुल्यपराक्रमाः ॥ ७ ॥
उभयोरपि राजेन्द्र सम्बन्धेनानुबध्यताम् ।
इक्ष्वाकुकुलमव्यग्रं भवतः पुण्यकर्म्मणः ॥ ८ ॥
विश्वामित्रवचः श्रुत्वा वसिष्ठस्य मते तदा ।
जनकः प्राञ्जलिर्वाक्यमुवाच मुनिपुङ्गवौ ॥ ९ ॥

एषां तुल्य परस्परकुलोत्कर्षापरो नास्ति ॥ २ ॥

धर्मसम्बन्धो युवयोर्विवाहसम्बन्ध सदृशोऽनुरूपः, किञ्चोर्मिलया सह वर्तमाना या सीता तस्याः यथायोग्ययोः रामलक्ष्मणयोर्य सम्बन्ध स्वरूपसम्पदा सदृश सीतयोर्मिलयेति पाठस्तु सुगम एव ॥ ३ ॥

किञ्चिदन्यद्वक्तव्यमस्ति तच्छ्रूयतामित्यन्वय ॥ ४ ॥ ५ ॥

कर्थौ पर्वोत्वाय तवाह भरतस्येत्यादि भाद्यार्ड पूर्वान्वयि तथा ते सुते सीतोर्मिले तयोरर्थं रामलक्ष्मणयोरर्थं ॥ ६ ॥

दशरथपुत्रेषु न कश्चिदपि वरगुणन्यूनतेत्याह पुत्रा इति ॥ ७ ॥

उभयोर्भ्रात्रोः सम्बन्धेन इक्ष्वाकुकुल सम्बध्यतां तव च सम्बन्धे पुण्यकर्म्मणो

कुलं धन्यमिदं मन्ये येषां तौ मुनिपुङ्गवौ ।
सदृशं कुलसम्बन्धं यदा ज्ञापयत: स्वयम् ॥ १० ॥
एवं भवतु भद्रं व: कुशध्वजसुते इमे ।
पत्न्यौ भजेतां सहितौ शत्रुघ्नभरतावुभौ ॥ ११ ॥
एकाह्ना राजपुत्रीणां चतसृणां महामुने ।
पाणीन् गृह्णन्तु चत्वारो राजपुत्रा महाबला: ॥ १२ ॥
उत्तरे दिवसे ब्रह्मन् । फल्गुनीभ्यां मनीषिण: ।
वैवाहिकं प्रशंसन्ति भगो यत्र प्रजापति: ॥१३॥
एवमुक्त्वा वच: सौम्यं प्रत्युत्थाय कृताञ्जलि: ।
उभौ मुनिवरौ राजा जनको वाक्यमब्रवीत् ॥ १४ ॥
परोधर्म्म: कृतोमह्यं शिष्योऽस्मि भवतो स्तथा ।
इमान्यासनमुख्यानि आस्यतां मुनिपुङ्गवौ ॥ १५ ॥

भवतोऽव्यय स्थित भवत्विति.शेष कथमीदृशेन महाराजेन युगपन्मया सम्बन्ध चतुष्टयं कार्य्यमिति व्यक्ततामास्त्वित्यर्थ ॥ ८ ॥ ९ ॥

स्वय न तु शिष्यादिमुखतो यत यस्मादाज्ञापयतस्तस्मादिद कुल धन्य मन्ये १० ॥

सहितौ नित्यसहचरौ अत्र क्रम न तात्पर्य्यम् ॥ ११ ।

एकाह्न इति टजभावोऽनित्या समासान्ता इति सप्तम्यर्थे तृतीय्न एकदिवस इत्यथ । चतसृणामिति दीर्घत्वमार्षम् ॥ १२ ॥

फल्गुनीभ्यामुत्तरफलगुनीभ्यामुपलक्षिते उत्तरे दिवसे द्वितीय दिवसे प्रजापतिर्देवता प्राशस्त्यञ्च विवाहप्रजोत्पत्तिसाधनयोनिलिङ्गाधिष्ठात्भगदैवतात्वेनेति कतक ॥ १३ ॥

प्रत्युत्थाय आसनादुत्थाय ॥ १४ ॥

परो धर्म्म. कन्यादानरूप अह भवतो शिष्योऽस्मि तथा यथा दशरथस्य युवयो शिष्य. स्वस्य शिष्यत्वे कनीयस. कुशध्वजस्य शिष्यत्वमर्थसिद्धम् आसनमुख्यानि

## द्विसप्ततितमः सर्गः ।

यथा दशरथस्येयं तथाऽयोध्यापुरी मम ।
प्रभुत्वेनास्ति सन्देहो यथार्हं कर्तुमर्हथ ॥ १६ ॥
तथा ब्रुवति वैदेहे जनके रघुनन्दनः ।
राजा दशरथो हृष्टः प्रत्युवाच महीपतिम् ॥ १७ ॥
युवामसंख्येयगुणौ भ्रातरौ मिथिलेश्वरौ ।
ऋषयो राजसंघाश्च भवद्भ्यामभिपूजिताः ॥ १८ ॥
स्वस्ति प्राप्नुहि भद्रं ते गमिष्यामः स्वमालयम् ।
श्राद्धकर्म्माणि विधिवद्विधास्य इति चाब्रवीत् ॥ १९ ॥
तमापृष्ट्वा नरपतिं राजा दशरथ स्तदा ।
मुनीन्द्रौ तौ पुरस्कृत्य जगामाशु महायशाः ॥ २० ॥
सगत्वा निलयं राजा श्राद्धं कृत्वा विधानतः ।
प्रभाते काल्यमुत्थाय चक्रे गोदानमुत्तमम् ॥ २१ ॥
गवां शतसहस्रञ्च ब्राह्मणेभ्यो नराधिपः ।

वंशाणा त्रीणि सिंहासनानि श्रास्यतामित्यार्थ परिपाल्यतामित्यर्थक राज्यत्रयमपि वैभवदायमित्यर्थ ॥ १५ ॥

ननु दशरथसिंहासनं कथ त्वया शक्यदानमत आह यथेति यथेय मिथिला दशरथस्य यथूष्टविनियोगार्हा एवमयोध्यापुरी मम अतो युष्माकं त्रिसिंहासनप्रभुत्व नास्ति सन्देह अतो यथायोग्य प्रभुत्व कर्तुमर्हथ पूजाया बहुवचन वयं सर्वे भवदधीना इत्याशय ॥ १६ ॥

हृष्ट एवमैक्यवादेनेति शेष ॥ १७ ॥

ऋषिरूपा भवद्भ्यां राजसङ्घास्ते भवद्भ्यामभिपूजिता अनेन विनयेन सर्वान् कथ प्रापिता भवद्भ्य एवैवं विनीतौ नायमपूर्वोऽर्थस्त्वयीति भाव ॥ १८ ॥

चविवर्जं ऽपि प्रतिग्रहीतृत्वात् दातरि जनके आशी स्वस्तीत्यादि ॥ १९ ॥

आपृष्ट्वा आपृच्छ्य ॥ २० ॥

प्रभाते उत्थाय काल्यं प्रात कालकर्तव्य गोदानाख्यं कर्मचक्रे ॥ २१ ॥

एकैकशो ददौ राजा पुत्रानुद्दिश्य धर्मतः ॥ २२ ॥

सुवर्णशृङ्गाः सम्पन्नाः सवत्साः कांस्यदोहनाः ।
गवां शतसहस्राणि चत्वारि पुरुषर्षभः ॥ २३ ॥

वित्तमन्यच्च सुबहु द्विजेभ्यो रघुनन्दनः ।
ददौ गोदानमुद्दिश्य पुत्राणां पुत्रवत्सलः ॥ २४ ॥

ससुतैः कृतगोदानैर्वृतः सन् नृपतिस्तदा ।
लोकपालैरिवाभाति वृतः सौम्यः प्रजापतिः ॥ २५ ॥

इत्यार्षे श्रीमद्वाल्मीकिरामायणे आदिकाव्ये बालकाण्डे
द्विसप्ततितमः सर्गः ॥ ७२ ॥

—o—

तदङ्गत्वेन प्रसिद्धं गोदानमाह गवामित्यादि एकैकश इत्यार्षम् ॥ २२ ॥

सम्पन्ना बहुदुग्धा हैम्यो याग्या वत्साः गवां चत्वारि लक्षाणि ददौ विप्रेभ्य इत्यन्वयः ॥ २३ ॥

गोदानं तदाख्यं कर्मविशेषम् । गोदानं चौलवत् कार्यं षोडशेऽब्दे तदुच्यते । अर्द्धापवर्गेण नास्ति श्मश्रुणां मुण्डनं भवेत् । स्नात्वा च वाग्यतस्तिष्ठेदह शेषं नयेद् दिनम् । आदित्येऽस्तमिते वाचं विसृजेदाग्निके गुरौ । अहं वरं ददामीति दद्याद्गां मिथुनं ततः इत्याश्वलायनकारिकायाम् । इदं समावर्तनपूर्वाङ्गं वेदव्रतानि वा पारं नीत्वा ह्युभयमेव वा गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञयेति याज्ञवल्क्यात ॥ २४ ॥

सौम्यः सोम इव सौम्यः सौम्य एव सौम्यः । ५ ।

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये
बालकाण्डे द्विसप्ततितमः सर्गः ।

——

# त्रिसप्ततितमः सर्गः।

यस्मिंस्तु दिवसे राजा चक्रे गोदानमुत्तमम्।
तस्मिंस्तु दिवसे वीरो युधाजित् समुपेयिवान्॥ १॥
पुत्रः केकयराजस्य साक्षाद्भरतमातुलः।
दृष्ट्वा पृष्ट्वा च कुशलं राजानमिदमब्रवीत्॥ २॥
केकयाधिपतीराजा स्नेहात् कुशलमब्रवीत्।
येषां कुशलकामोऽसि तेषां सम्प्रत्यनामयम्॥ ३॥
स्वस्रीयं मम राजेन्द्र! द्रष्टुकामो महीपतिः।
तदर्थमुपयातोऽहमयोध्यां रघुनन्दन!॥ ४॥
श्रुत्वात्वहमयोध्यायां विवाहार्थं तवात्मजान्।
मिथिलामुपयातांस्तु त्वया सह महीपते!॥ ५॥
त्वरयाभ्युपयातोऽहं द्रष्टुकामः स्वसुःसुतम्।
अथ राजा दशरथः प्रियातिथिमुपस्थितम्॥ ६॥
दृष्ट्वा परमसत्कारैः पूजनार्हमपूजयत्।
ततस्तामुषितो रात्रिं सह पुत्रैर्महात्मभिः॥ ७॥
प्रभाते पुनरुत्थाय कृत्वा कर्म्माणि तत्त्ववित्।
ऋषींस्तदा पुरस्कृत्य यज्ञवाटमुपागमत्॥ ८॥

समुपेयिवान् दशरथमिति शेष ।१।२।

केकयाधिपतिर्युधाजित् पिता कुशलमब्रवीदिति युष्मान् प्रतीति शेष। येषामस्माकं त्वं कुशलकामोऽसि तेषामस्माकं संप्रत्यनामयमिति चाब्रवीत्॥ ३॥

आगमनप्रयोजनमाह स्वस्रीयमिति स्वस्रीयं भरतम्।४।५।

अयोध्यायामहम् भरतं द्रष्टुकाम इहाभ्युपयात इत्यन्वयः।६।७।

यज्ञवाटं यज्ञशालाद्वारम्।८।

युक्ते मुहूर्त्ते विजये सर्वाभरणभूषितैः ।
भ्रातृभिः सहितो रामः कृतकौतुकमङ्गलः ॥ ९ ॥
वसिष्ठन्तु पुरस्कृत्वा महर्षीनपरानपि ।
वसिष्ठो भगवानेत्य वैदेहमिद मब्रवीत् ॥ १० ॥
राजा दशरथो राजन् । कृतकौतुकमङ्गलैः ।
पुत्रैर्नरवरश्रेष्ठो दातारमभिकांक्षते ॥ ११ ॥
दातृप्रतिग्रहीतृभ्यां सर्वार्थाः सम्भवन्ति हि ।
स्वधर्मं प्रतिपद्यस्व कृत्वावैवाह्यमुत्तमम् ॥ १२ ॥
इत्युक्तः परमोदारो वसिष्ठेन महात्मना ।
इत्युवाच महातेजा वाक्यं परमधर्म्मवित् ॥ १३ ॥
कः स्थितः प्रतिहारो मे कस्याज्ञां संप्रतीक्षते ।
स्वगृहे को विचारोऽस्ति यथाराज्यमिदं तव ॥ १४ ॥
कृतकौतुकसर्वस्वा वेदिमूलमुपागताः ।
मम कन्या मुनिश्रेष्ठ । दीप्ता वह्नेरिवार्चिषः ॥ १५ ॥

युक्ते इत्यादि सार्द्धश्लोकस्तेपागमदिति पूर्वेणान्वय युक्ते शुभलग्नादि युक्ते विजयं तदाख्ये । ९ ।

एत्य यज्ञवाटान्तर्वर्तिनं वैदेहम् । १० ।

दातार दातृत्ववाञ्छा प्रवेष्टुमाकांक्षते । ११ ।

दातृ प्रतिग्रहीतृभ्यां योगे इति शेष । सर्वार्था दानधर्म्मा हि यतोऽत उत्तम वैवाह्य चार्षं त्यज् विवाहोपयोगी लौकिका लौकिक कर्म्म कृत्वा तत स्वधर्मं प्रवेशाज्ञा दानरूपं प्रतिपद्यस्व तावदत्रार्य्येव तिष्ठाम इति भाव ॥ १२ ॥

परमोदार परमदाता ॥ १४ ॥

प्रतिहारो द्वारपाल· येन राजा गमनं प्रतिबध्यते इति शेष यथेद मम राज्य तथा तव तव स्वगृहे प्रवेशे को विचार इत्यर्थं ॥ १४ ॥

अपि च कृत स्वकर्तव्येन मयैव युष्मत् प्रतीक्षा क्रियत इत्याह कृतेति कृतं कौतुकसर्व्वस्वं वैवाहिक कृत्य मङ्गलानुष्ठान यासा ताःवेदिमूल वेदिसमीपम् ।१५

सद्योऽहं त्वत्प्रतीक्षोऽस्मि वेद्यामस्यां प्रतिष्ठितः ।
अविघ्नं क्रियतां सर्वं किमर्थं हि विलम्ब्यते ॥ १६ ॥
तद्वाक्यं जनकेनोक्तं श्रुत्वा दशरथस्तदा ।
प्रवेशयामास सुतान् सर्वानृषिगणानपि ॥ १७ ॥
ततो राजा विदेहानां वसिष्ठमिदमब्रवीत् ।
कारयस्व ऋषे ! सर्वामृषिभिः सह धार्म्मिक ! ॥ १८ ॥
रामस्य लोकरामस्य क्रियां वैवाहिकीं प्रभो ! ।
तथेत्युक्त्वा तु जनकं वसिष्ठो भगवानृषिः ॥ १९ ॥
विश्वामित्रं पुरस्कृत्य शतानन्दञ्च धार्म्मिकम् ।
प्रपामध्ये तु विधिवद्वेदिं कृत्वा महातपाः ॥ २० ॥
अलं चकार तां वेदिं गन्धपुष्पैः समन्ततः ।
सुवर्णपालिकाभिश्च चित्रकुम्भैश्च साङ्कुरैः ॥ २१ ॥

सद्य अस्मिन् काले त्वां प्रतीक्षत इति त्वत् प्रतीक्ष, अविघ्नमविलम्बं यथा तथा विवाहकर्म्म भवता क्रियतां किमर्थं द्वारवस्थानेन विलम्ब्यते भवतेति शेषः ॥

॥

श्रुत्वा वसिष्ठमुखात् ॥ १७ ॥

सर्वां वैवाहिकीमित्यनुषङ्गेणान्वय ॥ १८ ॥

लोकरामस्य लोकाभिरामस्येति यावत् ॥ १९ ॥

प्रपामध्ये यज्ञशालामध्ये इति कतक प्रपा मण्डप इत्यन्ये तथाश्रामकत्वेन प्रपात्वारोप वेदिं विवाहवेदिं इव वेदिरभ्यर्था ॥ २० ॥

सुवर्णपालिकाभि. साङ्कुराभिरित्यनुकर्ष. चित्रकुम्भैः नानावर्णादियुतकुम्भैः अच्छिद्रकुम्भैरिति पाठे स्फुटनादिदोषरहितैः. स्वर्णकुम्भैरित्यर्थ इति कतकः अच्छिद्रकुम्भैः. करकैरिति तीर्थ. । २१ ।

अङ्कुराढ्यैः शरावैश्च धूपपात्रैः सधूपकैः ।
शङ्खपात्रैः स्रुवैःस्रुग्भिः पात्रैरर्घ्यादिपूजितैः ॥ २२ ॥
लाजपूर्णैश्च पात्रीभिरक्षतैरपिसंस्कृतैः ।
दर्भैः समैः समास्तीर्य्य विधिवन्मन्त्रपूर्वकम् ॥ २३ ॥
अग्निमाधाय तं वेद्यां विधिमन्त्रपुरस्कृतम् ।
जुहावाग्नौ महातेजा वसिष्ठो मुनिपुङ्गवः ॥ २४ ॥
ततः सीतां समानीय सर्वाभरणभूषिताम् ।
समक्षमग्नेः संस्थाप्य राघवाभिमुखे तदा ॥ २५ ॥
अब्रवीज्जनकोराजा कौशल्यानन्दवर्द्धनम् ।
इयं सीता मम सुता सहधर्म्मचरी तव ॥ २६ ॥
प्रतीच्छ चैनां भद्रन्ते पाणिं गृह्णीष्व पाणिना ।
पतिव्रता महाभागा छायेवानुगता सदा ॥ २७ ॥
इत्युक्त्वा प्राक्षिपद्राजा मन्त्रपूतं जलन्तदा ।
साधु साध्विति देवानामृषीणां वदतान्तदा ॥ २८ ॥

अर्घ्यादिपूजितैस्तद्युक्तैः । २२ ।

लाजपूर्णैश्च पात्रीभिरित्यार्षं संस्कृतैर्हरिद्रालेपादिसंस्कारवद्भिः समैः सम-प्रमाणैः समास्तीर्य्य वेदिमिति शेषः । २३ ।

विधिना कल्पोक्ततन्त्रकलापेन मन्त्रैश्च पुरस्कृतं हविर्भिरिति शेषः विवाहहोमं दीना वरकृत्यत्वात्तत्पुरोहितो वसिष्ठो जुहाव । २४ ।

अग्नेः समक्षं राघवाभिमुखे देशे संस्थाप्येत्यन्वयः । २५ ।

इयं मद्भुजवीर्य्यनिर्जिता मम सुतेत्याभिजात्यसूचनं सह धर्म्मचरी अनेन यत् कर्तव्यं तदनया सहेति धारितम् । २६ ।

प्रतीच्छ प्रतिगृहाण तदुपयोगित्वं न पाणिना पाणिं गृह्णीष्व पाणिग्रहीतो हि सर्व्वथानतिक्रमणीयेति एवमुक्तं छायेवानुगता भविष्यतीत्यन्वयः । २७ ।

मन्त्रपूतं कन्यादानमन्त्रैश्च पूतं जलं प्राक्षिपत् रामहस्ते इति शेषः वदतां शब्द आसीदिति शेषः । २८ ।

देवदुन्दुभि निर्घोषः पुष्पवर्षो महानभूत् ।
एवं दत्त्वा सुतां सीतां मन्त्रोदक पुरस्कृतां ॥ २९ ॥
अब्रवीज्जनको राजा हर्षेणाभिपरिप्लुतः ।
लक्ष्मणागच्छ भद्रन्ते ऊर्मिलामुद्यतां मया ॥ ३० ॥
प्रतीच्छ पाणिं गृह्णीष्व माभूत् कालस्य पर्य्ययः ।
तमेव मुक्त्वा जनको भरतञ्चाभ्यभाषत ॥ ३१ ॥
गृहाण पाणिं माण्डव्याः पाणिना रघुनन्दन ! ।
शत्रुघ्नञ्चापि धर्मात्मा अब्रवीन्मिथिलेश्वरः ॥ ३२ ॥
श्रुतकीर्त्तेर्महाबाहो । पाणिं गृह्णीष्व पाणिना ।
सर्वे भवन्तः सौम्याश्च सर्वे सुचरितव्रताः ॥ ३३ ॥
पत्नीभिः सन्तु काकुत्स्था माभूत् कालस्य पर्य्ययः ।
जनकस्य वचः श्रुत्वा पाणीन् पाणिभिरस्पृशन् ॥ ३४ ॥
चत्वारस्ते चतसृणां वसिष्ठस्य मते स्थिताः ।
अग्निं प्रदक्षिणं कृत्वा वेदिं राजानमेवच ॥ ३५ ॥
ऋषींश्चापि महात्मानः सहभार्य्या रघूद्वहाः ।
यथोक्तेन ततश्चक्रुर्विवाहं विधिपूर्व्वकम् ॥ ३६ ॥
पुष्पवृष्टिर्महत्यासीदन्तरिक्षात्सुभास्वरा ।

दानीय मन्त्रोदकाभ्यां पुरस्कृताम् । २९ ।

उद्यता दातुं कृतनिश्चयाम् । ३० ।

प्रतीच्छ तत्रादिप्राग्व्याख्यात ज्येष्ठाद्भरतात् पूर्वं लक्ष्मणपाणिग्रहणस्तु भिन्नोदर
त्वात्र दोष । ३१ । ३२ ।

सुचरित व्रत ब्रह्मचर्य्यादि यैः । ३३ ।

पत्नीभिः सहिता, सन्तु भवन्तु त्वरायुक्ताः । ३४ ।

वेदिं विवाहवेदिं राजानं जनकम् । ३५ ।

दिव्य दुन्दुभिनिर्घोषैर्गीतवादित्र निःस्वनै। ३७ ॥
ननृतुश्चाप्सरःसङ्घा गन्धर्वाश्च जगुः कलम्।
विवाहे रघुमुख्यानां तदद्भुतमदृश्यत ॥ ३८ ॥
ईदृशे वर्त्तमाने तु तूर्य्योद्घुष्ट निनादिते।
त्रिरग्निं ते परिक्रम्य ऊहुर्भार्य्या महौजसः ॥ ३९ ॥
अथोपकार्य्यं जग्मुस्ते सभार्य्या रघुनन्दनाः।
राजाप्यनुययौ पश्यन् सर्षिसङ्घः सबान्धवः ॥ ४० ॥
इत्यार्षे श्रीमद्वाल्मीकीये रामायणे आदिकाव्ये बालकाण्डे
त्रिसप्ततितमः सर्गः ॥ ७३ ॥

---

## चतुःसप्ततितमः सर्गः।

---

अथ रात्र्यां व्यतीयायां विश्वामित्रो महामुनिः।
आपृष्ट्वा तौ च राजानौ जगामोत्तरपर्व्वतम् ॥ १ ॥
विश्वामित्रे गते राजा वैदेह मिथिलाधिपम्।
आपृष्ट्वैव जगामाशु राजा दशरथः पुरीम् ॥ २ ॥

सर्पींश्चापि प्रदक्षिणं कुर्व्वन्ति शेष यथोक्तेन शास्त्रोक्तेन प्रकारेण विवाह ता,
कृतः शेषं होमादि। ३६। ३७।

तदद्भुत दुन्दुभिनिर्घोषादिसहितपुष्पवृष्ट्यादि। ३८।

तूर्य्याणां यदुद्घुष्ट घोषस्तन्निनादिते काले त्रिरग्निमित्युपसंहारेण पुनर्वाद ॥३९

उपकार्य्यं शिबिर पश्यन् वधूवरसम्बन्धकल्याणम् ॥ ४० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकाण्डे
त्रिसप्ततितमः सर्गः ॥ ७३ ॥

आपृष्ट्वा आपृच्छ्य तौ दशरथजनकौ उत्तरपर्वतं कौशिकीतटावच्छिन्नम् ॥ १ ॥
जगाम मन्त्रमुषतोऽभूत् ॥ २ ॥

अथ राजा विदेहानां ददौ कन्याधनं बहु ।
गवां शतसहस्राणि बहूनि मिथिलेश्वरः ॥३॥
कम्बलानाञ्च मुख्यानां क्षौमान् कोट्यम्बराणि च ।
हस्त्यश्वरथपादात दिव्यरूपं स्वलङ्कृतम् ॥ ४ ॥
ददौ कन्याशतं तासां दासीदासमनुत्तमम् ।
हिरण्यस्य सुवर्णस्य मुक्तानां विद्रुमस्य च ॥ ५ ॥
ददौ राजा सुसंहृष्टः कन्याधनमनुत्तमम् ।
दत्त्वा बहुविधं राजा समनुज्ञाप्य पार्थिवम् ॥ ६ ॥
प्रविवेश स्वनिलयं मिथिलां मिथिलेश्वरः ।
राजाप्ययोध्याधिपतिः सह पुत्रैर्महात्मभिः ॥ ७ ॥
ऋषीन् सर्व्वान् पुरस्कृत्य जगाम सबलान्वितः ।
गच्छन्तन्तु नरव्याघ्रं सर्षिसङ्घं सराघवम् ॥ ८ ॥
घोराः स्म पक्षिणो वाचो व्याहरन्ति समन्ततः ।
भौमाश्चैव मृगाः सर्वे गच्छन्ति स्म प्रदक्षिणम् ॥ ९ ॥

कन्याधनं विवाहकाले कन्यायै देयं धनं यौतकाख्यं तस्यैव प्रपञ्चो गवामित्यादि ॥ ३ ॥

मुख्यानां कम्बलानां नेपालादिभवानां कम्बलानां बहूनि इति सम्बन्धः क्षौमान् बहूनिति विपरिणामः कोट्यम्बराणि कोटिसंख्यानि सामान्यवासांसि ॥ ४ ॥

कन्याशतं सर्वार्थेन तासां राजकुमारीणां प्रत्येकमिति शेषः दासीदासमिति गवाश्वादिवदेकत्वं हिरण्यं रजतं सुवर्णं हेम षष्ठ्यन्तानां कोटिपदाध्याहारेणान्वयः ॥ ५ ॥

पार्थिवं दशरथम् ॥ ६ ॥ ७ ॥

बलैश्चतुरङ्गैरनुगैः किङ्करैश्च सहितं तथा गच्छन्तं दशरथमिति शेषः ॥ ८ ॥

पक्षिणः करटादयः तत्र पक्षिणां घोरव्याहरणमादौ दुर्निमित्तं ततो मृगप्रदक्षिणगमनं सुनिमित्तम् ॥ ९ ॥

तान् दृष्ट्वा राजशार्दूलो वसिष्ठं पर्यपृच्छत ।
असौम्याः पक्षिणो घोरा मृगाश्चापि प्रदक्षिणाः ॥ १० ॥
किमिदं हृदयोत्कम्पि मनो मम विषीदति ।
राज्ञो दशरथस्यैतच्छ्रुत्वा वाक्यं महानृषिः ॥ ११ ॥
उवाच मधुरां वाणीं श्रूयतामस्य यत् फलम् ।
उपस्थितं भयं घोरं दिव्यं पक्षिमुखाच्च्युतम् ॥ १२ ॥
मृगाः प्रशमयन्त्येते सन्तापस्त्यज्यतामयम् ।
तेषां संवदतां तत्र वायुः प्रादुर्बभूव ह ॥ १३ ॥
कम्पयन्मेदिनीं सर्वां पातयंश्च महाद्रुमान् ।
तमसा संवृतः सूर्यः सर्वे नावेदिषुर्दिशः ॥ १४ ॥
भस्मना चावृतं सर्वं सम्मूढमिव तद्बलम् ।
वसिष्ठ ऋषयश्चान्ये राजा च ससुतस्तदा ॥ १५ ॥
ससंज्ञा इव तत्रासन् सर्वमन्यद्विचेतनम् ।
तस्मिंस्तमसि घोरे तु भस्मच्छन्नेव सा चमूः ॥ १६ ॥
ददर्श भीमसङ्काशं जटामण्डलधारिणम् ।
भार्गवं जामदग्न्येयं राजा राजविमर्दनम् ॥ १७ ॥

तान् शुभाशुभसूचकोत्पातान् असौम्या पक्षिणो घोरा घोरशब्दा इत्यर्थः ॥ १० ॥

इदं हृदयकम्पजनकं किमिदं दुःखोदर्कं सुखोदर्कं वेति प्रश्नः अनिश्चयान्मे मनो विषीदति ॥ ११ ॥

दिवि भवं दिव्यं पक्षिमुखात् च्युतं वचनं घोरं भयमुपस्थितं प्रशमयेदयतीति शेषः ॥ १२ ॥

प्रशमयन्ति प्रशमं सूचयन्तीत्यर्थः तेषां संवदतामित्यस्य पुर इति शेषः ॥ १३ ॥

तमो भस्म चोत्पातजम् ॥ १४ ॥ १५ ॥

ससंज्ञा इव ईषत् संज्ञा इत्यर्थः, अन्यत्तु बलं निःसंज्ञमेव भस्मच्छन्ना चमूरिति शेषः ॥ १६ ॥

कैलासमिव दुर्द्धर्षं कालाग्निमिव दुःसहम् ।
ज्वलन्तमिव तेजोभिर्दुर्निरीक्ष्यं पृथग्जनैः ॥ १८ ॥
स्कन्धे चासज्य परशुं धनुर्विद्युद्गणोपमम् ।
प्रगृह्य शरमुग्रञ्च त्रिपुरघ्नं यथा शिवम् ॥ १९ ॥
तं दृष्ट्वा भीमसङ्काशं ज्वलन्तमिव पावकम् ।
वसिष्ठ प्रमुखा विप्रा जपहोमपरायणाः ॥ २० ॥
सङ्गता मुनयः सर्वे संजजल्पुरथो मिथः ।
कच्चित्पितृवधामर्षी क्षत्रं नोत्सादयिष्यति ॥ २१ ॥
पूर्वं क्षत्रवधं कृत्वा गतमन्युर्गतज्वरः ।
क्षत्रस्योत्सादनं भूयो न खल्वस्य चिकीर्षितम् ॥ २२ ॥
एवमुक्त्वार्घ्यमादाय भार्गवं भीमदर्शनम् ।
ऋषयो राम रामेति मधुरं वाक्यमब्रुवन् ॥ २३ ॥
प्रतिगृह्य तु तां पूजामृषिदत्त्वां प्रतापवान् ।
रामं दाशरथिं रामो जामदग्न्योऽभ्यभाषत ॥ २४ ॥
,इत्यार्षे श्रीमद्वाल्मीकीये रामायणे आदिकाव्ये बालकाण्डे
चतुःसप्ततितमः सर्गः ॥ ७४ ॥

---

भीमसङ्काशं भयङ्करदर्शनम् । १७ ।

कैलासमिवेत्यनेन महाकारत्व दुर्द्धर्षमशक्यातिक्रमं पृथग्जनैः पामरजनैः । १८

प्रभातिशयेन विद्युद्गणोपमं धनुरुद्धृत्य शरञ्च प्रगृह्य त्रिपुरघ्नं शिवमिव स्थित मित्यर्थः । १९ ।

जपहोमपरायणा अग्न्यादीति शेषः यद्यपि होमोऽन्यधिकरणस्तदा पथि गमनसमये बाधितस्तथाप्यध्वनि मुहूर्त प्राप्तमित्यादिश्राव्य इति केचित् परे तु जपहोमपरायणत्वमुपलक्षणं अतएवाग्रे संजजल्पुरिति सङ्गच्छतेऽन्यथा तादृश होमादिपरायणानां जल्पासम्भवादित्याहुः । २० ।

# पञ्चसप्ततितमः सर्गः ।

राम । दाशरथे । वीर । वीर्यन्ते श्रूयतेऽद्भुतम् ।
धनुषो भेदनञ्चैव निखिलेन मयाश्रुतम् ॥ १ ॥
तदद्भुतमचिन्त्यञ्च भेदनं धनुषस्तथा ।
तच्छ्रुत्वाहमनुप्राप्तो धनुर्गृह्यापरं शुभम् ॥ २ ॥
तदिदं घोरसङ्काशं जामदग्न्यं महद्धनुः ।
पूरयस्व शरेणैव स्वबलं दर्शयस्व च ॥ ३ ॥
तदहं ते बलं दृष्ट्वा धनुषोऽप्यस्य पूरणे ।
द्वन्द्वयुद्धं प्रदास्यामि वीर्यश्लाघ्यं महन्तव ॥ ४ ॥
तस्य तद्वचनं श्रुत्वा राजा दशरथस्तदा ।
विषण्णवदनो दीनः प्राञ्जलिर्वाक्यमब्रवीत् ॥ ५ ॥

सखीया परस्पर जल्पमाह कश्चिदित्यादि श्लोकद्वयेऽपि न शब्दो ननु शब्दे वा नन्वित्यर्थको वितर्के । २१ । २२ । २३ । २४ ।

इति श्रीरामाभिराम श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

किमभाषतेत्यत्राह रामेति निखिलेन कार्त्स्न्येन चेन ताटकावधादिसमुच्चयः ।

यत्त्वया तथाऽनायासेन धनुषो भेदनं कृतं तदद्भुतमचिन्त्यं चान्येन मनसापि अशक्यं अतस्तच्छ्रुत्वेत्यादि गृह्य गृहीत्वा । २ ।

जामदग्न्यं जमदग्नेः स्वपितुरागतं अवार्थे ष्यञ् आर्षं शरेण युक्तं पूरयस्वैव आकर्षयस्व । ३ ।

अस्यापि धनुषः पूरणे सति वीर्यं श्लाघ्यं वीर्यवत् श्लाघ्यं च वीर्येण तव वा श्लाघ्यमित्यन्ये । ४ ।

तद्वचनं द्वन्द्वयुद्धवचनम् । ५ ।

उपरोषात्प्रशान्तस्त्वं ब्राह्मणश्च महातपाः।
बालानां मम पुत्राणामभयं दातुमर्हसि ॥ ६ ॥
भार्गवाणां कुले जातः स्वाध्यायव्रतशालिनाम्।
सहस्राक्षे प्रतिज्ञाय शस्त्रं प्रक्षिप्तवानसि ॥ ७ ॥
स त्वं धर्म्मपरो भूत्वा काश्यपाय वसुन्धराम्।
दत्त्वा वनमुपागम्य महेन्द्रः कृतकेतनः ॥ ८ ॥
मम सर्व्वविनाशाय सम्प्राप्तस्त्वं महामुने ! ।
न चैकस्मिन् हते रामे सर्व्वे जीवाम हे ! वयम् ॥ ९ ॥
ब्रुवत्येवं दशरथे जामदग्न्यः प्रतापवान्।
अनादृत्य तु तद्वाक्यं राममेवाभ्यभाषत ॥ १० ॥
इमे द्वे धनुषी श्रेष्ठे दिव्ये लोकाभिपूजिते।
दृढ़े बलवती मुख्ये सुकृते विश्वकर्म्मणा ॥ ११ ॥
अनुसृष्टं सुरैरेकं त्र्यम्बकाय युयुत्सवे।
त्रिपुरघ्नं नरश्रेष्ठ ! भग्नं काकुत्स्थ ! यत्त्वया ॥ १२ ॥
इदं द्वितीयं दुर्द्धर्षं विष्णोर्दत्तं सुरोत्तमैः।
तदिदं वैष्णवं रामधनुःपरपुरं जयम् ॥ १३ ॥

उपरोषीत तज्ज्ञत्रवधात्। ६।

सहस्राक्ष इन्द्रसन्निधौ प्रतिज्ञाय अतः परं शस्त्रं न ग्रहीष्यामीत्येवं प्रक्षेपवान् ७।

तपसे महेन्द्र कृत केतनत्वम्। ८।

त्वं तथात्वात्तं शस्त्रादिमं सर्व्वं विनाशाय कुतः सम्प्राप्त इत्यन्वयः सर्व्वनाशमेवो-पपादयति नचैतत्यादि। ९। १०।

इमे वक्ष्यमाणे लक्षणे यत्त्वया भग्नं यच्च मया धृतमेते इत्यर्थः बलवती बल-वत्त्वाढ्ये सुकृते यत्ननिर्म्मिते। ११।

युयुत्सवे त्रिपुरवासिभिरिति शेषः त्रिपुरघ्नं तद्धननसाधनम्। १२।

वैष्णवं विष्णवे दत्तं तदिदं वैष्णवं वैष्णवत्वेन प्रसिद्धम्। १३।

समानसारं काकुत्स्थ ! रौद्रेण धनुषात्विदम् ।
तदा तु देवताः सर्वाः पृच्छन्ति स्म पितामहम् ॥१४॥
शितिकण्ठस्य विष्णोश्च बलाबलनिरीक्षया ।
अभिप्रायन्तु विज्ञाय देवतानां पितामहः ॥ १५ ॥
विरोधं जनयामास तयोः सत्यवतां वरः ।
विरोधे तु महद्युद्ध मभवद्रोमहर्षणम् ॥ १६ ॥
शितिकण्ठस्य विष्णोश्च परस्परजयैषिणोः ।
तदा तु जृम्भितं शैवं धनुर्भीमपराक्रमम् ॥ १७ ॥
हुङ्कारेण महादेव स्तम्भितोऽथ त्रिलोचनः ।
देवैस्तदा समागम्य सर्षिसङ्घैः सचारणैः ॥ १८ ॥
याचितौ प्रशमं तत्र जग्मतु स्तौ सुरोत्तमौ ।
जृम्भितं तद्धनुर्दृष्ट्वा शैवं विष्णुपराक्रमैः ॥ १९ ॥
अधिकं मेनिरे विष्णुं देवाः सर्षिगणा स्तथा ।
धनूरुद्रस्तु सक्रुद्धो विदेहेषु महायशाः ॥ २० ॥

रौद्रेण शैवेन शैवस्यं दानीमसारत्वमाह तदात्विति ॥ १४ ॥

विष्णौ स्त्रिपुरसंहारे शरत्वेन रुद्रपरिकरान्तभावश्रवणात् अय रुद्राद्दुर्बल उत सम इत्येव शितिकण्ठविष्णोर्बलाबलज्ञानाय देवता पितामहं पृच्छन्ति स्म स च पितामहस्तेषां देवानां उक्तमभिप्राय विज्ञाय ॥ १५ ॥

सत्यवतां वर सत्यसङ्कल्पः स्वसङ्कल्पेन देवानां मोहं निरसितुमेकात्मनोरपि रुद्रविष्णोर्विरोधं जनयामास तावपि तत् सङ्कल्पसिद्ध्यर्थमेव विरोधं चक्रतु इद युद्ध दक्षयज्ञवधे बोध्य अत पूर्वेण न विरोध ॥ १६ ॥

तदा हुङ्कारेण विष्णुना शैवं धनुर्विजृम्भितं शिथिलीकृत महादेवश्च स्तम्भित । १७ ॥ १८ ॥

याचिताविति एतावत्पर्य्यन्तं हृष्टा प्राप्तनिश्चयैर्देवैर्युद्धादुपरति याचितौ देवतानुग्रहाय प्रशमं जग्मतु. ॥ १९ ॥

विष्णु अधिकं श्रेष्ठं सेव्यत्वेन मेनिरे ज्ञातबला: यत्र तत्, प्रकृतयुद्धे विष्णो

देवरातस्य राजर्षेर्ददौ हस्ते ससायकम्।
इदञ्च वैष्णवं रामधनुःपरपुरंजयम्॥ २१॥
ऋचीके भार्गवे प्रादाद्विष्णुः सन्यासमुत्तमम्।
ऋचीकस्तु महातेजाः पुत्रस्याप्रतिकर्म्मणः॥ २२॥
पितुर्मम ददौ दिव्यं जमदग्नेर्महात्मनः।
न्यस्तशस्त्रे पितरि मे तपोबलसमन्विते॥ २३॥
अर्जुनो विदधे मृत्युं प्राकृतां बुद्धिमास्थितः।
वधमप्रतिरूपन्तु पितुः श्रुत्वा सुदारुणम्॥
क्षत्रमुत्सादयं रोषाज्जातं जातमनेकशः॥ २४॥
पृथिवीं चाखिलां प्राप्य कश्यपाय महात्मने।
यज्ञस्यान्ते ददं राम। दक्षिणां पुण्यकर्म्मणे॥ २५॥

राधिक्यदर्शनात् त्रिपुरवधे शिवस्याधिक्यदर्शनात्तयोः साम्यग्रहणमिति तात्पर्य्यं वीर्याधिकमित्यस्य स्वीयपूर्वज्ञानविषयस्वरूपापेक्षयाधिकमित्यर्थः। धनू रुद्रस्त्विति एवं युद्धदशायां क्रुद्ध पश्चाद्देवप्रार्थनया प्रसन्नः शिवो देवेभ्यो दत्वा ततः सर्वैर्देवैः मुह युद्धार्थं धनुरिक्षता देवरातस्य ददौ अतएव वरुणेन दत्तमिति वक्ष्यमाणेन रुद्रेण देवानादत्तमित्युक्तग्रन्थेन च न विरोध इत्याहुः॥ २०॥

एवञ्च शैवस्य धनुषस्तदारभ्य शिथिलत्वेन तद्भङ्क्तान ते वीर्याधिक्यमिति भावं दर्शभिप्राय अथ स्वधनुष आगममाह इद चेत्यादि परपुर जयमित्यार्षमसंज्ञायाम्॥

भार्गवे भृगुपुत्रे स उत्तमरूपी विष्णुर्न्यास प्रादात् अप्रतिकर्म्मण स्वहन्तर्य्यपि शापादिप्रतिक्रियारहितस्य॥ २२॥

न्यस्तशस्त्रे न्यस्त त्यक्त विष्णुधनूरूप शस्त्र येन तथाभूते तपोबलयुतेऽपि पितरि प्राकृता बुद्धिमास्थितोऽर्जुनः कार्त्तवीर्य्यो मत्पितुर्मृत्यु विदधे॥ २३॥

तमयोग्य पितुर्वधं श्रुत्वाहं रोषात् क्षत्रमुत्सादयं उत्सादितवान् अडभाव आर्षः॥ २४॥

प्राप्य स्वबलेनेति शेषः पुण्यकर्म्मणे यज्ञरूपपुण्यसाद्गुण्यार्थम्॥ २५॥

दत्त्वा महेन्द्रनिलय स्तपोबलसमन्वितः ।
श्रुत्वा तु धनुषो भेदं ततोऽहं द्रुतमागतः ॥ २६ ॥
तदेवं वैष्णवं राम ! पितृपैतामहं महत् ।
क्षत्रधर्मं पुरस्कृत्य गृह्णीष्व धनुरुत्तमम् ॥ २७ ॥
योजयस्व धनुः श्रेष्ठे शरं परपुरं जयम् ।
यदि शक्तोऽसि काकुत्स्थ ! द्वन्द्वं दास्यामि ते ततः॥२८॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बाल-
काण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

---

## षट्सप्ततितमः सर्गः ।

—०—

श्रुत्वा तु जामदग्न्यस्य वाक्यं दाशरथि स्तदा ।
गौरवाद्यन्त्रितकथः पितूराम मथाब्रवीत् ॥ १ ॥

दत्त्वा भूमिमिति शेषः महेन्द्रपर्व्वतः धनुषः शैवस्य ॥ २६ ॥

पितृपैतामहं पितृपितामहक्रमादागतं उत्तरपदवृद्धिरार्षी क्षत्रधर्मं मद्वृत्तिं च यथापूर्वमङ्गीकृतं क्षत्रधर्मं न तु ब्राह्मणधर्ममाश्रित्य त्यजेत्यर्थः । ब्राह्मणवत् शान्तिमास्थाय नाहं शक्त इति मा ब्रूहीत्यर्थः इति कतकः ॥ २७ ॥

शक्तोऽसि शरयोजने इति शेषः तावतापि न त्वां त्यक्ष्याम्यपि तु द्वन्द्वं दास्यामीत्यर्थः । अन्यथा मां शरणं व्रजेति तात्पर्य्यम् ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकाण्डे
पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

पितुर्गौरवात् पितृसन्निधिवशात् यन्त्रिता नियमिता कथा येन सः ॥१॥

पितुरानृण्यं पितृहन्तृक्षत्रवधेन पितृवैरप्रतिमास्थितः सन् यत् कर्म त्वं समकृत्वः क्षत्रियवधरूपं कृतवानसि तदनुरुध्यामहेऽङ्गीकुर्मः पूर्वेषामस्य वैरशुद्धं कृतं यत्नात् । १ ।

श्रुतवानसि यत्कर्म्म कृतवानसि भार्गव ।
अनुरुध्यामहे ब्रह्मन् पितुरानृण्यमास्थितः ॥ २ ॥
वीर्य्यहीन मिवा शक्तं क्षत्रधर्मेण भार्गव ।
अवजानासि मे तेजः पश्य मेऽद्य पराक्रमम् ॥ ३ ॥
इत्युक्त्वा राघवः क्रुद्धो भार्गवस्य वरायुधम् ।
शरञ्च प्रतिजग्राह हस्ताल्लघु पराक्रमः ॥ ४ ॥
आरोप्य स धनूरामः शरं सज्यञ्चकार ह ।
जामदग्न्यन्ततो राम रामः क्रुद्धोऽब्रवीदिदम् ॥ ५ ॥
ब्राह्मणोऽसीति पूज्यो मे विश्वामित्र कृतेन च ।
तस्माच्छक्तो न ते राम मोक्तु प्राणहरं शरम् ॥ ६ ॥
इमां वा त्वद्गतिं राम तपोबल समर्जितान् ।
लोकानप्रतिमान्वापि हनिष्यामीति मे मतिः ॥ ७ ॥

यस्मात् त्वं क्षत्रधर्मेण युक्तं वीर्यहीनमशक्तमिव मन्यमानोऽवजानासि तन्नानुरुध्यामहे अतोऽद्य मे तेजः दर्पाभिभवसमर्थं तन्मूलं मे पराक्रमं च पश्य ॥ ३ ॥

क्रुद्धः प्राग्भार्गवकृतावमानवर्धनेन क्रोधार्तः तद्धस्तात् स्वयमेव धनुः चादात् भार्गवनिष्ठा खण्डवान् शक्तिं जग्राह तदुक्तं पाद्मे इत्युक्त्वा देवि वैष्णव्या शक्त्या तद्गतया सह । जग्राह वैष्णवं चाप विनयेन च लीलयेति । अथवा प्राग्वर्णितं निर्वीर्यो जामदग्न्योऽसीति लघु शीघ्रं पराक्रमो यस्य सः ॥ ४ ॥

आरोप्य आरोपं कृत्वा शरं सज्यं ज्यायुक्तञ्चकार ।

जमदग्निपुत्रत्वेन ब्राह्मणोऽसीति विश्वामित्रभगिन्याः पौत्रोऽसीति पूज्यस्त्वं मेऽसि वधानर्होऽसि । अतस्ते प्राणहरं शरं मोक्तुं न शक्तोऽस्मीति शेषः ॥ ६ ॥

इमां प्रत्यक्षसिद्धां गतिं गतिसाधनं पादौ तच्छक्तिं चाकाशगमनादिरूपां लोकान् लोकप्राप्तिसाधनं धर्मं तत्पादकमस्त्रं हन्मि बुद्धिस्तेऽस्त्यथवा शपमिति पाठान्तरं द्वयोः धर्म्मं उभयोर्मध्ये यदिच्छसि यत्त्वेष्टं तद्वदेत्यर्थः ॥ ७ ॥

नह्ययं वैष्णवो दिव्यः शरः पर पुरञ्जयः ।
मोघः पतति वीर्य्येण बलदर्पविनाशनः ॥ ८ ॥

वरायुधधरं रामं द्रष्टुं सर्षिगणाः सुराः ।
पितामहं पुरस्कृत्य समेतास्तत्र सर्वशः ॥ ९ ॥

गन्धर्वाप्सरसश्चैव सिद्धचारण किन्नराः ।
यक्ष राक्षस नागाश्च तद्द्रष्टुं महदद्भुतम् ॥ १० ॥

जड़ीकृते तदा लोके रामे वरधनुर्द्धरे ।
निर्वीर्य्यो जामदग्न्योऽसौ रामो राममुदैक्षत ॥ ११ ॥

तेजोभिर्गतवीर्यत्वाज्जामदग्न्यो जड़ीकृतः ।
रामं कमलपत्राक्षं मन्दं मन्दमुवाच ह ॥ १२ ॥

काश्यपाय मया दत्ता यदा पूर्वं वसुन्धरा ।
विषये मे न वस्तव्यमिति मां काश्यपोऽब्रवीत् ॥ १३ ॥

सोऽहं गुरुवचः कुर्वन् पृथिव्यां न वसे निशाम् ।
तदा प्रभृति काकुत्स्थ । कृता मे काश्यपस्य ह ॥ १४॥

कुत एवमत आह नहीति वीर्य्येण स्वशक्त्या शत्रुणा बलदर्पविनाशन मोघं व्यर्थं । ८ ।

वरायुध वैष्णव धनु समेता मिलिता

तद्द्रष्टुमागता इति शेष । १० ।

वरधनुर्धरे रामेऽधिकरण तस्य भार्गवस्यालोके तेजसि सङ्क्रान्ते सतीति शेष तत परशुरामस्य देहान्निर्गता वैष्णव पश्यता सर्व्वदेवाना तेजो राममुपागमदिति नृसिंहपुराणात् पूर्वोक्त पाद्माच्च अतएव भार्गवे जडीकृते सति निर्वीर्य्य स रामो राममुदैक्षत उत्कृतविष्णुतेजस्कमपश्यदित्यर्थ । ११ ।

तदेव विवृणोति तेजोभिरित्यादि रामसङ्क्रान्तैस्तेजोभिर्हेतुभिर्गतवीर्य्यतया जडीकृत परशुराम उवाच शरवध्यप्रश्नोत्तरमिति शेष । १२ ।

विषये देशे एवमुक्तिश्च स्वभीतयादि निवृत्तये । १३ ।

गुरुवच काश्यपवच निशा रात्रि न वसे तत्कार्षं । तदा यदा दत्ता यदा च

तामिमां मद्गतिं वीर ! हन्तुं नार्हसि राघव ! ।
मनोजवं गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥ १५ ॥
लोकास्त्वप्रतिमा राम ! निर्जिता स्तपसा मया ।
जहि तान् शरमुख्येन माभूत् कालस्य पर्य्ययः ॥१६ ॥
अक्षय्यं मधुहन्तारं जानामि त्वां सुरेश्वरम् ।
धनुषोऽस्य परामर्शात् स्वस्ति तेऽस्तु परन्तप ! ॥ १७ ॥
एते सुरगणाः सर्वे निरीक्षन्ते समागताः ।
त्वामप्रतिमकर्म्माणमप्रतिद्वन्द्वमाहवे ॥ १८ ॥
न चेयं तव काकुत्स्थ ! व्रीडा भवितुमर्हति ।
त्वया त्रैलोक्यनाथेन यदहं विमुखीकृतः ॥ १९ ॥

न वस्तव्यमित्युक्त तदा प्रभृतीति शेष पृथिव्या न वसे इत्यर्थ यतोऽह प्रसिद्ध काश्यपस्य अग्रे प्रतिज्ञा कृता इति शेष पृथिव्या रात्रौ न वसामीत्येव रूपा प्रतिज्ञा कृता । १४

यद्येव मतस्त्वामिमामित्यादि ता मद्गति आकाशगमनसाधनौ पादौ चेन्न हनिष्यसि तदा मनोजव पादमास्थाय काश्यपेन समुद्रं गा च दत्त महेन्द्रं गमिष्यामि अन्यथा प्रतिज्ञाहान्या महत्सङ्कट स्यादिति भाव १५ ।

तपसा यज्ञादरूपेण निर्जिता अर्जिता अत पुण्यार्जितलोकहननाध्यनुज्ञया विश्व तत्त्वज्ञत्व यद्वा रामस्य लोकदानप्रतिबन्धशौ स्वातन्त्र्यदर्शनेन परेशत्वबोधनञ्च पापस्यापि शतयज्ञकृत पुण्य तदस्मात्र्यर्वदयदिति । १६ ।

यत उताम्रतत्वस्य शान इति श्रुतिप्रसिद्ध ब्रह्मैवत्वामित्याह अक्षय्यमिति अक्षय्य अनाद्यन्त केनापि पराजय नेतुमशक्यञ्च एव निश्चये हेतुर्धनुष इत्यादि अस्य वैष्णवस्य तदवतारोपस्य परामर्शो ग्रहणाकर्षणादि ॥ १७ ।

अप्रतिद्वन्द्व प्रतिभटरहितम् । १८ ।

इय त्वद्विषयेऽपजित्व व्रीडा व्रीडाहा तव हेतुस्त्वयेत्यादि विमुखीकृतस्त्वयतां स्वश्विप्रयोजनेनाशक्त कृत एतेन स्वस्य भगवदंशत्व रामस्य च पूर्णभगवदवतारत्व सूचित स्वातिरिक्तेन विमुखीकरणं हि व्रीडा ननु स्वात्मना मायया तया करणे

शरमप्रतिमं राम ! मोक्तुमर्हसि सुव्रत ।।
शरमोक्षे गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥ २० ॥
तथा ब्रुवति रामे तु जामदग्न्ये प्रतापवान् ।
रामो दाशरथिः श्रीमांश्चिक्षेप शरमुत्तमम् ॥ २१ ॥
स हतान् दृश्य रामेण स्वाल्लोकांस्तपसार्ज्जितान् ।
जामदग्न्यो जगामाशु महेन्द्रं पर्वतोत्तमम् ॥ २२ ॥
ततो वितिमिराः सर्वा दिशश्चोपदिशस्तथा ।
सुराः सर्षिगणा रामं प्रशशंसुरुदायुधम् ॥ २३ ॥
रामं दाशरथिं रामो जामदग्न्यः प्रपूजितः ।
ततः प्रदक्षिणीकृत्य जगामात्मगतिं प्रभुः ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे
षट्सप्ततितमः सर्गः ॥ ७६ ॥

० –

इति भावः एतद्व्यवहारप्रयोजनञ्च [illegible] तस्य पूर्वोक्तम् रामस्य। पूर्णतया वस्तुसम्पादनशक्ति भाति [illegible] महत्त्व [illegible] दस्कर त्वात् एतदर्थ [illegible] दुर्गमत्वादीना [illegible] पुनरुक्तम् । १९ ।

शरमोक्षे गमिष्यामि पापसा तपसा दग्धे [illegible] च शरेण दग्धे फलप्रति बन्धे जीवन्मुक्तो भूत्वा गमिष्यामीत्यर्थः अनेन [illegible] पर्वत दर्शि तम् । २० । २१ ।

दृश्य दृष्ट्वा । २२ । २३ ।

रामः दाशरथिना ब्राह्मणत्वात् पूजितो नमस्कृतश्च प्रशस्यर्हेति पाठान्तर दाशरथिं प्रदक्षिणीकृत्य अन्तर्यामित्वेन ज्ञानात् प्रदक्षिणकरणस्य चोचितत्वाच्च तस्य प्रणत्यकरणं कार्यमिति [illegible] तत्त्वज्ञानं स्वस्थानं जगामेत्यर्थः प्रभुरिति ब्रह्मत्वेन सर्वलोकप्रभुत्वम् ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकाण्डे
षट्सप्ततितमः सर्गः ॥ ७६ ॥

## सप्तसप्ततितमः सर्गः ।

---

गते रामे प्रशान्तात्मा रामो दाशरथिर्धनुः ।
वरुणायाप्रमेयाय ददौ हस्ते महायशाः ॥ १ ॥
अभिवाद्य ततो रामो वसिष्ठप्रमुखानृषीन् ।
पितरं विकलं दृष्ट्वा प्रोवाच रघुनन्दनः ॥ २ ॥
जामदग्न्यो गतो रामः प्रयातु चतुरङ्गिणी ।
अयोध्याभिमुखी सेना त्वया नाथेन पालिता ॥ ३ ॥
रामस्य वचनं श्रुत्वा राजा दशरथः सुतम् ।
बाहुभ्यां संपरिष्वज्य मूर्ध्न्युपाघ्राय राघवम् ॥ ४ ॥
गतो राम इति श्रुत्वा हृष्टः प्रमुदितो नृपः ।
पुनर्जातं तदा मेने पुत्रमात्मानमेव च ॥ ५ ॥
चोदयामास तां सेनां जगामाशु ततः पुरीम् ।
पताकाध्वजिनीं रम्यां तूर्योद्घुष्टनिनादिताम् ॥ ६ ॥

रामे परशुरामे प्रशान्तोगतक्रोध आत्मा चित्त यस्य हस्ते स्वहस्ते स्थितं धनुर्वरु-
णाय देवं महर्षीनुकदर्शनार्थ मन्तरिक्ष स्थिताय ददौ न्यासात्मनेतिशेष' वरुण
स्याप्रमेयत्व भगवं साक्षाद्ब्रह्मविद्या प्रदत्वात् इदश्च तैत्तिरीयोपनिषदि स्पष्टम् ॥ १॥

विकल परशुरामभयेन धनुदानकृतात्मस्य मायया तिरोधानमन्यामृपति ॥
२ ॥ ४ ॥

हर्ष एवाधिकावस्थ प्रमोद । ५ ।

ता सेना प्रथम क्षुभिता पश्चात् प्रामाश्वासा चेत्यर्थः जगाम सेनेति शेष'
पताकाध्वजपट ध्वजोदस्थ पताकायुक्त ध्वजवतीं पताका, क्षुद्रध्वजा, ध्वजा
महान्त इत्यर्थं रम्या स्वभावत उद्घुष्ट घोषं । ६ ।

सिक्तराजपथां रम्यां प्रकीर्णकुसुमोत्कराम् ।
राजप्रवेशसुमुखैः पौरैर्मङ्गलपाणिभिः ॥ ७ ॥
संपूर्णां प्राविशद्राजा जनौघैः समलङ्कृताम् ।
पौरैः प्रत्युद्गतो दूरं द्विजैश्च पुरवासिभिः ॥ ८ ॥
पुत्रैरनुगतः श्रीमान् श्रीमद्भिश्च महायशाः ।
प्रविवेश गृहं राजा हिमवत् सदृशं प्रियम् ॥ ९ ॥
ननन्द स्वजनै राजा गृहे कामैः सुपूजितः ।
कौसल्या च सुमित्रा च कैकेयी च सुमध्यमा ॥ १० ॥
वधूप्रतिग्रहे युक्ता याश्चान्या राजयोषितः ।
ततः सीतां महाभागामूर्मिलां च यशस्विनीम् ॥ ११ ॥
कुशध्वजसुते चोभे जगृहुर्नृपयोषितः ।
मङ्गलालापनैर्होमैः शोभिताः क्षौमवाससः ॥ १२ ॥
देवतायतनान्याशु सर्वास्ताः प्रत्यपूजयन् ।
अभिवाद्याभिवाद्यांश्च सर्वा राजसुता स्तदा ॥ १३ ॥

सिक्तेन राजपथेन शोभमानत्वाद्रम्याम् । ७ । ८ ।

श्रीमद्भिः दारपरिग्रहादाभिकलक्ष्मीभिः पुत्रैः सुधालेपजधावल्यादीन्यपि च हिमवत्सादृश्यं गृहं ॥ ९ ॥

कामैः विषयभोगपरिकरस्रक् चन्दनादिभिः सुपूजितः प्राप्तपूजः ननन्द ॥ १० ॥

वधूनां स्नुषाणां प्रतिग्रहे मङ्गलाचरणपूर्वकं दर्शनस्पर्शने ॥ ११ ॥

मङ्गलालापनैर्मङ्गलगानालापनैराशीर्वादैरुपलालिता इति शेषः होमैर्गृहप्रवेशनीयहोमैः प्राप्तशोभना ॥ १२ ॥

देवतायतनानि पुरगृहदेवतायतनानि ताः सर्वा राजसुताः स्नुषाः सर्वा राजपत्न्यः प्रत्यपूजयन् प्रणामयन्ति स्म अभिवाद्यान् अभिवादनार्हान् अभिवाद्य नमस्कार्य ॥ १३ ॥

रेमिरे मुदिताः सर्वा भर्तृभिर्मुदितारहः ।
कृतदाराः कृतास्त्राश्च सधनाः ससुहृज्जनाः ॥ १४ ॥
शुश्रूषमाणाः पितरं वर्त्तयन्ति नरर्षभाः ।
कस्यचित्त्वथ कालस्य राजा दशरथः सुतम् ॥१५॥
भरतं कैकयीपुत्र मब्रवीद्रघुनन्दनः ।
अयं कैकयराजस्य पुत्रो वसति पुत्रक ! ॥ १६ ॥
त्वां नेतु मागतो वीरो युधाजिन्मातुलस्तव ।
श्रुत्वा दशरथस्यैतद्भरतः कैकयीसुतः ॥ १७ ॥
गमनायाभिचक्राम शत्रुघ्न सहित स्तदा ।
आपृच्छ्य पितरं शूरो रामञ्चाक्लिष्टकारिणम् ॥ १८ ॥
मातृश्चापि नरश्रेष्ठः शत्रुघ्न सहितो ययौ ।
युधाजित्प्राप्य भरतं सशत्रुघ्नं प्रहर्षितः ॥ १९ ॥
स्वपुरं प्राविशद्वीरः पिता तस्य तुतोषह ।
गतेच भरते रामो लक्ष्मणश्च महाबलः ॥ २० ॥
पितरं देवसङ्काशं पूजयामासतु स्तदा ।
पितुराज्ञां पुरस्कृत्य पौरकार्य्याणि सर्वशः ॥ २१ ॥
चकार रामः सर्वाणि प्रियाणि च हितानि च ।
मातृभ्यो मातृकार्य्याणि कृत्वा परमयन्त्रितः ॥ २२ ॥

कृतास्त्रा लब्धास्त्रा कृताशा इति पाठे अनुष्ठित पितृनियोगाः ॥ १४ ॥

वर्त्तयन्ति पितृवृत्त कुर्व्वन्ति नरर्षभा रामादय कस्यचित्कालस्य अत्यये इति शेष ॥ १५ ॥ १६ ॥

मातुलस्तवेति अतस्तन्नगर गत्वा आगच्छेति शेष एतद्वाक्यम् ॥ १७ ॥

अक्लिष्ट कस्यापि दुःख यथा न भवति तथा कर्त्तुं शीलमस्य त रामम् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

गुरूणां गुरुकार्य्याणि काले कालेन्ववेक्षत ।
एवं दशरथः प्रीतो ब्राह्मणानैगमास्तथा ॥ २३ ॥
रामस्य शीलवृत्तेन सर्वे विषयवासिनः ।
तेषामतियशा लोके रामः सत्यपराक्रमः ॥ २४ ॥
स्वयम्भूरिव भूतानां बभूव गुणवत्तरः ।
रामश्च सीतया सार्द्धं विजहार बहूनृतुन् ॥ २५ ॥
मनस्वी तद्गतमनास्तस्य हृदि समर्पितः ।
प्रिया तु सीता रामस्य दाराः पितृकृता इति ॥ २६ ॥
गुणाद्रूप गुणाच्चापि प्रीतिर्भूयोऽभिवर्द्धते ।
तस्याश्च भर्त्ताद्विगुणं हृदये परिवर्त्तते ॥ २७ ॥

प्रियार्थी हितानि हितानिपर्य्यन्ते इष्टजनकानि पौराणा परममत्यन्त यन्त्रित श्रुतिस्मृतिमर्यादाऽलङ्घी ॥ २ ॥

गुरूणा तद्विषये परमयन्त्रित गुरुकार्य्याणि गुरुसम्बन्धि शुश्रूषादीनि नैगमा-वणिज ॥ २३ ॥

विषयवासिन प्रीता इति शेष तेषा चतुर्णां पुत्राणा मध्ये सत्यपराक्रमो राम एवातियशा भूताना मध्ये स्वयम्भूरिव गुणवत्तरो बभूवेत्युत्तरेणान्वय ॥ २४ ॥

बहूनृतून् द्वादशवर्षाणीत्यर्थं इति बहव ॥ २५ ॥

मनस्वी अनुकूलमनस्क अतएव तद्गतमना नित्य सीतागतमना तस्या हृदि समर्पित सम्बन्धसामान्ये षष्ठी तयेत्यर्थं एतेन परस्परानुरागोदर्शित. पितृकृता ब्राह्मविवाहसदृशविवाहेन पितृदत्ता सविवाह एव सर्व्वथा श्लाघ्य इति भाव ॥ २६ ॥

नैतावदेव किन्तु गुणाज्जितकारित्व पातिव्रत्यादिरूपात् रूप सौन्दर्य्यं तद्रूपाद् गुणाच्च भूयोऽधिक रामस्य प्रीतिर्वर्धते स्म तस्याश्च हृदये गुणाद्रूपगुणाच्च भर्त्ता द्विगुण परिवर्त्तते स्म ॥ २७ ॥

अन्तर्गतमपि व्यक्तमाख्याति हृदयं हृदा ।
तस्य भूयो विशेषेण मैथिली जनकात्मजा ॥ २८ ॥
देवताभिः समा रूपे सीता श्रीरिवरूपिणी ।
 तया स राजर्षि सुतोभि कामया
  समेयिवानुत्तम राजकन्यया ।
 अतीव रामः शुशुभे मुदान्वितो
  विभुः श्रिया विष्णुरिवामरेश्वरः ॥ २९ ॥

इत्यार्षे श्रीमद्वाल्मीकीरामायणे आदिकाव्ये चतुर्विंशति-
साहस्रिकायां संहितायां बालकाण्डे रामक्रीड़ा-
ख्यान नाम सप्तसप्ततितमः सर्गः ॥ ७७ ॥
समाप्त बालकाण्डम् ।

---

• तस्य रामस्यान्तर्गतं हृदयं हृदयाभिप्रायं मैथिली हृदा स्वहृदयेन भूयोऽधिकं विशेषेण मैथिली जनकात्मजा रूपिणी श्रीरिव रूपे देवताभिः समा सीता आख्याति जानाति अतो शोभत भर्त्ता तद्हृदयस्य इति ॥ २८ ॥

अभिकामया स्वविषयकेच्छावत्या स्वेच्छाविषयया च समेयिवान्सयुक्तः. विभुः. विभुत्वशक्तिमान् अमरेश्वरो विष्णुः श्रियेव तत्र द्वादशवर्षाणि राघवः सहसीतया रमयामास धर्म्मात्मा नारायण इव श्रियेति पाद्मे उक्तं एकोनषोडशवर्षस्य विश्वा-मित्रेण नयनात्पञ्चदशवर्षसमाप्तौ विवाह इति बोध्यम् ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकाण्डे
सप्तसप्ततितमः सर्गः ॥ ७७ ॥

बालकाण्डे तु सर्गाणा कथिता सप्तसप्ततिः ।

श्लोकानां द्वे सहस्रे च पञ्चाशच्च शतद्वयम् ॥ १ ॥

बाले बालेन कम्पेन कृत्वा सरक्षणं कृती ।

सीता चक्रे धृता येन स रामः पातु नः सदा ॥ २ ॥

बालकाण्डव्याख्या समाप्ता । ग्रन्थसंख्या ५०५० । मूल २२५० । टीका २८००

श्रीसीतारामः प्रसन्नोऽस्तु ।